# ॥ दारिद्र्यहर स्तोत्रम् ॥

हा कृष्ण बदरीवासिन् क्वासि व्यास दयानिधे ।
इमामवस्थां संप्राप्तमनाथं किमुपेक्षसे ॥ १ ॥

हा सच्चिच्छुभद क्वासि तर्काभयविराजित ।
इमामवस्थां संप्राप्तमनाथं किमुपेक्षसे ॥ २ ॥

हा कीटराज्यसंदायिन् क्वासि वासिष्ठवंशज ।
इमामवस्थां संप्राप्तमनाथं किमुपेक्षसे ॥ ३ ॥

हा पाराशर्य सर्वेश क्वासि सत्यवतीसुत ।
इमामवस्थां संप्राप्तमनाथं किमुपेक्षसे ॥ ४ ॥

हा तापसशिरोरत्न क्वासि देवेश तुष्टिमन् ।
इमामवस्थां संप्राप्तमनाथं किमुपेक्षसे ॥ ५ ॥

हा विद्यामणिजन्माब्धे क्वासि द्वैपायनानघ ।
इमामवस्थां संप्राप्तमनाथं किमुपेक्षसे ॥ ६ ॥

हा शुद्धबुद्धिद क्वासि बादरायण सर्वदा ।
इमामवस्थां संप्राप्तमनाथं किमुपेक्षसे ॥ ७ ॥

हा दुर्बुद्धितमःसूर्य क्वासि वेदविभाजक ।
इमामवस्थां संप्राप्तमनाथं किमुपेक्षसे ॥ ८ ॥

संसारकाननेऽज्ञानद्वारकीलसुदुःखितम् ।
दारिद्र्यदुःसहावस्थमनाथं पाहि मां प्रभो ॥ ९ ॥

विषयासक्तचेतोवाक्यरीरं दोषदूषितम् ।
दारिद्र्यदुःसहावस्थमनाथं पाहि मां प्रभो ॥ १० ॥

श्रौतस्मार्तक्रियाभ्रष्टं बाह्यशौचविवर्जितम् ।
दारिद्र्यदुःसहावस्थमनाथं पाहि मां प्रभो ॥ ११ ॥

दुर्दानादानकर्तारं दुरन्ने निरतं सदा ।
दारिद्र्यदुःसहावस्थमनाथं पाहि मां प्रभो ॥ १२ ॥

परदाररतं नित्यं परनिंदायुतं सदा ।
दारिद्र्यदुःसहावस्थमनाथं पाहि मां प्रभो ॥ १३ ॥

आम्नायज्ञेयकायात्मन् भक्तभक्तिप्रकाशित ।
अमंदानंद मां व्यास कृपादृष्ट्या विलोकय ॥ १४ ॥

जननीवचनत्राणपरायण गुणायन ।
अमंदानंद मां व्यास कृपादृष्ट्या विलोकय ॥ १५ ॥

अचक्षुःपूर्वजाभेद्यसंजयज्ञानद प्रभो ।
अमंदानंद मां व्यास कृपादृष्ट्या विलोकय ॥ १६ ॥

व्याख्याशक्तिप्रद श्रीद कविताप्रद मानद ।
अमंदानंद मां व्यास कृपादृष्ट्या विलोकय ॥ १७ ॥

ज्ञानदीपप्रभाभात ब्रह्मांडांतर्बहिःस्थित ।
अमंदानंद मां व्यास कृपादृष्ट्या विलोकय ॥ १८ ॥

अशेषदोषदावाग्ने भवामयभिषङ्मणे ।
अमंदानंद मां व्यास कृपादृष्ट्या विलोकय ॥ १९ ॥

राकाधिपकराश्लेषहर्ष निर्दोषपूरुष ।
अमंदानंद मां व्यास कृपादृष्ट्या विलोकय ॥ २० ॥

इमं मंत्रं पठेद्यस्तु शतवारं गुरोः शुचिः ।
ददाति तस्य संपत्तिं शुकतातो न संशयः ॥ २१ ॥

॥ इति श्रीयदुपत्याचार्यकृतं दारिद्र्यहर (व्यास) स्तोत्रम् ॥